॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥

## निर्ऋतिकृत

# ॥ सीतास्तुतिः ॥

*This text has been prepared by*
*Vishal Pandey (B.Tech IIT Kanpur)*
*with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara***
***Jagadguru Rāmānandāchārya***
***Śrī Svāmī Rāmabhadrāchārya***

## निर्ऋतिरुवाच

अभूदधर्मप्रसरः पुरा यत् पापात्मिका सृष्टिरभूत्तरामम,
ततोऽपि संरक्षित आत्मनो जनस्तस्मै नमस्तेऽखिलधर्ममूर्तये ॥ १ ॥

कलिः कलंकी कठिनः कलाहरः सर्वात्मना पापरुचिर्जनुष्मताम्।
यन्नामनोदेन विलुप्तवैभवस्तस्मे प्रमोदावनिसुश्रिये नमः ॥ २ ॥

भावाश्चये काममदादयोऽनिशं महोर्जिताश्चैव महाबला नृषु।
त्वकीर्ततस्ते विफलात्मतामगुस्तस्मै समस्तोद्धरणात्मने नमः ॥ ३ ॥

नमो नमस्ते जनकेन्द्रनन्दिनी प्रमोदकुन्दावनकुञ्जवासिनि।
नमो नमस्ते रसिकेन्द्रसंगते स्फुरन्महाभोगसमूहभोगिनि ॥ ४ ॥

शृङ्गारमूर्तेः स्मर आधिदैवकः श्रीरामचन्द्रस्य मनोविमोहनः।
तदंशमात्रा स्फुटमुद्गतो भवे चक्रे मुनीनां महतां विमोहनम् ॥ ५ ॥

एवं त्वदीयाखिल लीलारसार्थं सम्पुष्टरूपाः क्रोधमोहादिभावाः।
तेषामंशा विषयानन्दयोगाज्जनं निबध्नन्तिनिजेन कर्मणा ॥ ६ ॥

पञ्चेन्द्रियाणां खलु याश्चवृत्तयस्त्वद्भक्तिभाजामकूलतां दधुः।
ता एव लग्ना विषयेषु भूयसिश्वभ्रे लोकं पातयित्वा प्रवृद्धाः ॥ ७ ॥

त्वं शैशवे जानकीति प्रगीता सीतेति चाद्यैः कविभिः सुधीभिः।
तारुण्यमभ्येत्य च मोदिनीति प्रमोदारण्ये सहजानन्दिनीति ॥ ८ ॥

एकैकं ते नाम सर्वेषु वेदेष्वाख्यातं चेदेष लोको गृणाति।
तस्यानुभावाद्याति भावं परं ते प्रेमाख्यं यः कोटिजन्मातिपूतः ॥ ९ ॥

यज्ञैर्दानैस्तपसाचातिमात्रैर्वृतः सुपुण्यातिशयेन कश्चित् ।
त्वत्पादाब्जं भजते देवि सीते तस्य क्षणात्सुलभो रामचन्द्रः ॥ १० ॥

शेषो रविर्वायु पुत्रोऽथ रुद्रः साक्षात्स्वयंभूर्भगवान् विरञ्चिः ।
इन्द्रश्चन्द्रः सनकाद्याश्च सर्वे जानन्ति त्वांमीशि भजन्ति भक्त्या ॥ ११ ॥

ज्ञानात्मको भगवान् श्रीहयास्यस्त्वद्भक्तिमात्रादुत्पुलकः सदैव ।
गृणाति त्वां कुम्भजाप प्रसादाद्यत्कुभजस्त्वां भजते नित्यमेव ॥ १२ ॥

स्वायंभुवो मनुराख्यातधर्मः सर्वं ते चाब्रूत राद्धान्तमेकम् ।
त्वद्भक्त्याख्ययेनरामः प्रसन्नो नित्यानन्दं स्वपदं संददाति ॥ १३ ॥

नान्यः पन्था विद्यते स्वात्मलब्ध्यै नान्यो भावो विद्यते चापि लोके ।
नान्यः जानं विद्यते सर्ववेदेष्वेकं सीतानाममात्रं विहाय ॥ १४ ॥

ज्ञानं सीतानामतुल्यं न किंचिच्छास्त्रं सीतानामतुल्यं न किंचित् ।
कृत्यं सीतानामतुल्यं न किंचिद्ध्येयं सीतानामतुल्यं न किंचित् ॥ १५ ॥

एकं शास्त्रं गीयते यत्र सीता एका लोके देवता चापि सीता ।
एको मन्त्रश्चापि सीतेति नाम कर्माप्येकं पूज्यते यत्र सीता ॥ १६ ॥

सर्वे देवा यत्पराः सम्बभूवुः सर्वे यज्ञा यत्पराः सम्बभूवुः ।
सर्वे मार्गा यत्पराः सम्बभूवुः सा त्वं सीतानाम लोके प्रसिद्धा ॥ १७ ॥

सीता नित्या जानकी मोदिनीति
प्रेमा क्षेमा सहजानन्दिनीति ।
ध्यायञ्छृण्वन् सगिरन् कीर्तयंश्च
जन्तुर्नित्यं मुच्यते सर्वबन्धात् ॥ १८ ॥

पाहि त्राहि त्रिभुवनमिदं स्वाश्रयं नित्यसिद्धे
पाहि त्राहि त्रिभुवनजनान् स्वाश्रयान् देवि सीते।
पाहि त्राहि स्वरमणकरं रामचन्द्रस्थ लोकं
भूयो भूयो जगति भवती भ्राजतां नित्यमेव ॥ १९ ॥

जगत्स्वामिनी भामिनी कामिनी
त्वं जगत्तोषिणी पोषिणी रामयो वा।
जगद्वन्दिता नन्दिता नन्दिनीत्वं
चिरं देवि दीप्यत्स्वभक्तानवन्ती ॥ २० ॥

अये रामचन्द्रप्रिये पूर्णरूपे
परा चेन्दिरा त्वत्कटाक्षोप्थरूपा।
परा भारती भ्राजमानाभवे त्वं
प्रिया रामचन्द्रस्य नित्यं रमस्व ॥ २१ ॥

स्वाराज्यसाम्राज्यराज्याधिदेवी स्वानन्दसम्पत्समूहाधिराज्ञी।
प्रेमानुभावप्रभावप्रसन्नाक्राडस्व नित्यं जनानां मनस्सु ॥ २२ ॥

चिदानन्दाकारं तव वपुरशेषागमगणैः
स्तुतं वन्द्यं ब्रह्मादिभिरतुलभक्तिप्रवताम्।
प्रयातैः संसेव्यं गुणरहितया प्रेमकलया
चिरं चित्ते मातः स्वयमुपरमेद्येन च भवः ॥ २३ ॥

त्वदीयं लावण्यं निखिलनिगमैरादिकविभिः
प्रगीतं यल्लेशोऽभ्युदयतिशशाङ्कप्रभृतिषु।
श्रिया जुष्टेषूच्चैः प्रकृतिषु जगद्वस्तुषु यतो
जनानां दृङ्मोहो भवति भवतो विस्मृतिरपि ॥ २४ ॥

अहो भाग्यं नरेन्द्रस्य जनकस्य यदालये।
प्रमोदवनतोऽभ्येत्य परा लक्ष्मीर्विराजते ॥ २५ ॥

किं भाग्यं मिथिलापुरीगृहजुषां भावोद्धुराणां
नृणां येषां दृष्टिपथं प्रयाति सुषमा लोकोत्तरं तावकी।
ब्रह्माद्यैरपि वा स्मृता क्षणमपि स्वाराज्यलक्ष्मीमदं
दूरीकृत्य तनौ तनोति पुलकान् प्रेमाङ्कुरं चेतसि॥ २६॥

अद्यापि त्वं प्रमुदविपिने क्रीडसि स्वैर्विलासै
स्तेनैवाविर्भवसि वपुषा दृश्यसेऽत्रापि चैवम्।
कुन्दारण्ये कलयसितरां चैव लीलां विशालां
तेनैवासि श्रुतिषु गदिता व्यापिका ब्रह्मरूपा॥ २७॥

अहो ईदृशी श्रीरिहाभून्नपूर्वं स्फुटं याजनि व्यक्तमेवावतारे।
पुरे चापि देशे वने वीथिकासु प्रभाते यथा सूर्यरोचिः प्रसंगात्॥ २८॥

तमो विनष्टं सकलभवेऽस्मिन् प्रफुल्लतां मानसपङ्कजानि।
सातामगुः सम्प्रति तद्द्रुहां च शिरोऽवतंसान्यपतन् पृथिव्याम्॥ २९॥

आब्रह्मलोकं जगदेतदद्धा प्रसन्नतां यन्नितरां जगाम।
तेनैव भावानि सुमङ्गलानि महानुभावैर्विदितानि लोके॥ ३०॥

जय जय जाह्नवीविमलकीर्तिकदम्बरी
जय जय सज्जनावलिमनोज्ञशुभाचरिता।
जय जय भावनामयसुमङ्गलादिव्यतनो
जय जय जानकीत्वममिताद्भुतमाङ्गलिके॥ ३१॥

पाहि पाहि जगत्सर्वं रमय स्वामिकं निजम्।
श्रीरामं चिद्घनानन्दं लीला विस्तारयामुना॥ ३२॥
यथा पूर्वं रमयसि प्रमोदविपिनान्तरे।
तथाधुनापि रमय रामचन्द्रं रमापतिम्॥ ३३॥

प्रमोदविपिने यस्ते लीलापरिकरोऽखिलः ।
अधुनापि स एवात्र जायतां मनसो मुदे ॥ ३४ ॥

एवं स्तुत्वा निर्ऋतिर्देवतात्मा तस्या अग्रेन्यपतदण्डवत्सः ।
भूयो भूयस्तनुसंजातरोमा नत्वानत्वाहृदि हर्षं चकार ॥ ३५ ॥

**इति श्रीमदादिरामायणे ब्रह्मभुशुण्डसंवादे पश्चिमखण्डे भरतलक्ष्मणीये सीताजन्मोत्सवे निर्ऋतिकृतस्तुतिर्नाम त्रयोविंशोऽध्यायः ॥ २३ ॥**